हृते कलियुगे वर्षैर्वेदाग्निग्रहसागरैः ।
यज्ञवेदेश्वरेणैषा कृता मौक्तिकमालिका ॥

इह हि—

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यःपरनिर्वृतये कान्तासम्मिततयोपदेशयुजे ॥

इति प्रामाणिकप्रसिद्ध्या पुण्यश्लोकगुणवर्णनरूपकाव्यस्य यशःप्रमुखनद्दुतरदृष्टादृष्ट-फलोपधायकत्वे निश्चिते तत्रापि भगवच्चरितरूपत्वेन परमपुरुषार्थभूतमोक्षोपयोगि-भगवद्भक्त्युन्मेषं प्रति च प्रभुसम्मिताच्छब्दप्रधानाच्च प्रत्यवायभीत्या प्रवर्तकाद्वेदात् तथा सुहृत्सम्मितेभ्योऽर्थप्रधानेभ्यो हिताहितविचारसापेक्षतया प्रवर्तकेभ्यः पुराणादिभ्यश्च कान्तासम्मितस्य रसप्रधानस्य श्रोतुस्सरसतापादनेनाविचारत-स्सरभसप्रवर्तकस्य काव्यस्याभ्यर्हितत्वेन सहृदयानामात्मनश्च तथाविधनिखिल-पुरुषार्थानाशासानो लोकानुग्रहाय वसुदेवात्कृतावतारस्य भगवतः कृष्णस्य प्राधान्येन रुक्मिणीपरिणयप्रपञ्चनरूपं **रुक्मिणीकल्याणाख्यं** काव्यमारभमाणः **श्रीराजचूडामणिदीक्षितो** नाम महाकविः प्रारिप्सितप्रबन्धपरिसमाप्तिपरिपन्थि-प्रत्यूहप्रत्याख्यानाय स्वाभीष्टदेवतात्मकं स्त्रीपुंसाकारैकशरीरावलम्बनेन स्वस्य जगज्जनकत्वादिकमभिव्यञ्जयन्तं भगवन्तमर्धनारीश्वरमधिकृत्य श्रेयःप्रार्थनरूपं मङ्गलमाचरन्स्वस्याग्रजन्मानमर्धनारीश्वरनामानमात्मनो विद्यागुरुमप्यर्थादनुमन्धत्ते—

**वामालकावल्लभभावमुद्रासीमाविभागेन्द्रमणीशिलेव ।**
**रोमावली राजति यस्य मध्ये सोमावतंसः स सुखाय भूयात् ॥१॥**

वामेति—यस्य प्रस्तूयमानस्य अर्धनारीश्वरस्येत्यर्थः । मध्ये वामदक्षिण-भागयोरन्तराळे न पुनर्वलग्ने रोमावल्या नाभेरूर्ध्व एवावस्थानेन मध्यावस्थित्य भावात् । न चोर्ध्वापवर्गायास्सीमाशिलाया मूलावलम्बेनैवावस्थानस्य वक्तव्यतया उरःपर्यन्ताक्रमणं प्रतिभासमात्रमेवेति वाच्यम् । देहावलम्बनेनार्धाङ्गरूपतया तादृशसम्भावनानिमित्ततया मध्यशब्दवाच्यवलग्नोर्ध्वगतनाभेः परत एव